दृष्टिं यत्न करोमि तद्धि सकलं

लोके च्व दीदं फना

भीतोहं द्विज जाति कर्म कुटिला

खाहं पनाहि तु रा

नित्यं त्वच्चरणाम्बुजार्चन विधौ

भूयात् खुशे दिल मरा

कारुण्यं कुरु दीननाथ सततं

दीगर रजा (हि) ष्मा ।।

य

# UPADES'ASÂHASRÎ

BY

## S'RÎMAD BHAGAVATPÂDÂCHÂRYA

**With the Commentary Padayojanikâ**

BY

**S'RÎMAD RÂMATÎRTHA.**



**EDITED BY**

**WÂSUDEVA LAKSHMAṆA S'ÂSTRÎ PAṆAS'ÎKAR.**

---

**PUBLISHED BY**

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF THE "NIRNAYA-SAGAR" PRESS.

Bombay :

---

1914.

---

*Price one Rupee.*



श्रीमद्भगवत्पादाचार्यप्रणीता

# उपदेशसाहस्री ।



पदयोजनिकाख्यया श्रीमद्रामतीर्थविरचित-
व्याख्यया संवलिता ।



अयं ग्रन्थः

पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा
वासुदेवशर्मणा संस्कृतः ।

मुम्बय्यां

**तुकाराम जावजीश्रेष्ठिना**

स्वीये निर्णयसागराख्यमुद्रणयन्त्रालयेऽङ्कयित्वा प्रकाशितः ।

---

शाकः १८३५, सन १९१४.

---

मूल्यं १ रूप्यकम् ।

# अथात्र प्रास्ताविकम् ।



वेदान्तवाक्यपुष्पेभ्यो ज्ञानामृतमधूत्तमम् ।
उज्जहारालिवद्यो नस्तस्मै सद्गुरवे नमः ॥

इह जगति धर्मादिचतुःपुरुषार्थसंपत्तिर्हि वेदार्थज्ञानाधीनेति निर्विवादम् । वेदस्तदर्थश्चातिगहन इति तदर्थमाकलय्य लोकोद्दिधीर्षुणा परमकारुणिकेन श्रीमच्छंकराचार्येण नैकशः सन्ति संदब्धा ग्रन्थाः । शंकराचार्यस्तावत्कलिगतेषु ३८८९ वर्षेषु प्रादुर्बभूवेति विज्ञायते । तथा चोक्तं शंकरमन्दारसौरभे—**'प्रासूत तिष्यशरदामतियातवत्यामेकादशाधिकशतोनचतुःसहस्र्याम्'** इति । अन्यत्रापि—**'निधिनागेभवह्न्यब्दे ३८८९ विभवे मासि माधवे । शुक्ले तिथौ दशम्यां तु शंकरार्योदयः स्मृतः'** इति च । तेन वैक्रमवत्सरमानेन ८४५ मिते वर्षगणे प्रादुर्बभूवेति निश्चीयते । यद्यप्यत्र विषये भिन्नभिन्नारभव्या विवदन्ते विद्वांसः तथापि शिरोनिर्दिष्टप्रमाणेनायमेव तेषामवतारसमय इति नः सिद्धान्तः । आस्तामयं समयविवादः, यत्तैरवतीर्याखिलधरामण्डले अद्वैतवेदान्तसिद्धान्तप्रणयनादिभिरतीवोपकृतं न तथान्येन केनापीति जगद्गुरुत्वमेषामेवाधिकं राजते । तत्प्रणीतेष्वियमुपदेशसाहस्री १९ एकोनविंशतिप्रकरणोपेता अद्वैतवेदान्तसिद्धान्तानुद्बोधयन्ती जागर्ति सर्वत्र भारतवर्षेषु । अस्या एकैकं पद्यं सर्वो-

पदेशक्षमं ललितच्छन्दोबद्धमर्थगम्भीरं च विद्यते । एतद्व्याख्यापि मञ्जुलैव व्याख्यात्रा प्रणीतास्ति । संप्रत्यस्यैकं सव्याख्यं २०० द्विशतवर्षेभ्यः पूर्वं लिखितं पुस्तकं प्रायःशुद्धमुपलब्धम् । तस्मात्पूर्वमुद्रितं संवाद्य सम्यक्परिशोध्यास्माभिरिदं सुचिक्कणपत्रेषु मधुराक्षरैः सुव्यवस्थया मुद्रितमस्ति । अस्य सर्वोपयुक्तत्वं सौभाग्यंच दर्शनसमकालमेव स्फुटीभविष्यति ।

विद्वदेकान्तवशंवदः—**पणशीकरो वासुदेवशर्मा ।**



# उपदेशसाहस्रीप्रकरणानुक्रमः ।



इति उपदेशसाहस्रीप्रकरणविषयानुक्रमः ।



श्रीमच्छङ्कराचार्यप्रणीता

# उपदेशसाहस्री ।



श्रीमद्रामतीर्थविरचितपदयोजनिकाव्याख्यायुता ।

## उपोद्घातप्रकरणम् १

यत्राध्यस्तमिदं सर्वं मेयमात्राद्यविद्यया ।
भाति नो भाति यज्ज्ञानात्तदस्मि ब्रह्म चित्सुखम् ॥ १ ॥

तदेवं सर्वोपनिषदर्थसारसंग्रहं गद्यबन्धप्रबन्धेन संक्षेपतो युक्त्योपदिश्य पुनरप्युक्तमेवार्थजातं पद्यबन्धप्रबन्धेन सोपस्करं विस्तरेणोपदेष्टुकामो भगवान्भाष्यकारः पद्यग्रन्थारम्भे ग्रन्थप्रतिपाद्यपरदेवतानमस्काररूपं मङ्गलं कृतं शिष्यशिक्षार्थं श्लोकेनोपनिबध्नाति—

**चैतन्यं सर्वगं सर्वं सर्वभूतगुहाशयम् ।
यत्सर्वविषयातीतं तस्मै सर्वविदे नमः ॥ १ ॥**

**चैतन्यमिति** ॥ तस्मै सामान्यतः प्रसिद्धाय नमः प्रह्वीभावो भूयादित्यर्थः । तस्य विशेषजिज्ञासायां लक्षणमाह—सर्वविद इति । सर्वं वेत्तीति सर्ववित्तस्मै । सर्वशब्देन भूतं भवद्भविष्यदित्येतदात्मकं जगदुच्यते तत्सर्वं सर्वावस्थं सर्वदा सवितृवत्संनिधिसत्तामात्रेण प्रकाश-

यत्सर्ववित् । नहीदं जडं स्वसत्तास्फूर्त्योः स्वतन्त्रं भवति, अतो यदधीनसत्तास्फूर्तिमिदं तदस्ति सर्वज्ञं सर्ववित्सर्वाश्रय इति तटस्थलक्षणं सिद्धं भवतीति भावः । एवं जगत्प्रवृत्तिस्थितिसंहारनियामकत्वेन सन्मात्रतया ताटस्थ्येन लक्षितस्य स्वरूपलक्षणं वदन् सर्वविषयवेदनाश्रयतया सर्ववित्त्वमिति वैशेषिकादिमताशङ्कां वारयति—चैतन्यमिति । यच्चैतन्यं चितिस्वभावं ज्ञानस्वरूपं तस्मै इति यत्तच्छब्दयोः संबन्धः । 'विज्ञानमानन्दं ब्रह्म', 'सत्यं ज्ञानमनन्तं ब्रह्मे' त्यादिश्रुतिभ्यः । नह्यचित्स्वभावस्य चिद्धर्मकता युज्यते । न खल्वनुष्णस्वभावकं जलमुष्णत्वधर्मकं भवतीति भावः । चिदेकरसस्यापि सर्वज्ञत्वं मायोपाधिकं व्यावहारिकमित्यनवद्यम् । **ननु** चेतनोऽणुपरिमाण इत्येकदेशिनो, मध्यमपरिमाण इति दिगम्बरा मन्यन्ते, अतस्तस्य सर्वविषयसंसर्गाभावे कथं सर्वज्ञत्वम् । प्रकाशो हि सावित्रादिः स्वसंसृष्ट एव प्रकाशव्यवहारहेतुर्नासंसृष्टे विषय इत्यत आह—सर्वगमिति । 'नित्यं विभुं सर्वगतं', 'आकाशवत्सर्वगतश्च नित्यः', 'स पर्यगाच्छुक्र'मित्यादिश्रुतिविरोधादणुपरिमाणत्वादिकल्पनानवकाश इति । उत्क्रान्त्यादेर्लिङ्गोपाधिकत्वश्रवणान्न तेन स्वाभाविकविभुत्वार्थकश्रुतिबाध इति दिक् । **ननु** सर्वगमित्युक्ते सर्वमन्यत्तद्गतं च ब्रह्मान्यदिति तस्य वस्तुपरिच्छेदप्रतिभासात्सांख्यादिवादिमतवत्सजातीयविजातीयभेदवत्त्वं प्राप्तमित्यत आह—सर्वमिति । 'सर्वं खल्विदं ब्रह्म', 'इदं सर्वं यदयमात्मा', 'आत्मैवेदं सर्वमि'त्यादिश्रुतेरित्यर्थः । अनेन सर्वोपादानत्वमुक्तम् । उपादानं हि स्वकार्यं सर्वं व्याप्नुवद्व्यापकं भवति नानुपादानम् । तद्ध्येकदेशेन संसृज्यमानमव्यापकमेव भवतीत्यतः सर्वोपादानत्वात्सर्वमित्यभिप्रायः । सर्वात्मकमपि ब्रह्म जीवाद्व्यावृत्तं जीवस्य

१ न्त्यादिलिङ्ग. २ तद्ध्येकदेशेन.

ब्रह्मणोऽभिन्नत्वात्, नह्यसंसारि संसारिभावेन विरुद्धधर्मवतोरैक्यं संभवति दहनतुहिनवदित्यत आह—सर्वभूतगुहाशयमिति । सर्वभूतानां स्थावरजङ्गमानां गुहासु बुद्धिषु शेत इति सर्वभूतगुहाशयम् । गूढा अस्यां ज्ञानज्ञेयज्ञातृपदार्था इति गुहा बुद्धिः । गूहतेः संवरणार्थस्य धातोरिदं रूपम् । सर्वप्राणिबुद्ध्यन्तःसाक्षितया निर्विकारं वर्तत इत्यर्थः । तथाच श्रुतिः 'यो वेद निहितं गुहायां परमे व्योमन्', 'हृद्यन्तर्ज्योतिः पुरुषः', 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदय' मित्याद्या । तथाच 'तत्सृष्ट्वा तदेवानुप्राविश'दित्यादिना-स्रष्टुरेव ब्रह्मणो जीवरूपेण प्रवेशश्रवणात् 'अयमात्मा ब्रह्मे'त्यादितादात्म्यश्रुतेश्च न ब्रह्मणोऽन्यो जीव इत्यवधार्यते । विरुद्धधर्मसंसर्गप्रतिभासस्तूपाधिनिबन्धनो न स्वरूपनिबन्धन इति भावः । एतेन जीवो नाम ब्रह्मणोंऽशो विकारो वा स्वतन्त्र एवेति[1] भेदाभेद(भेद)वादिपक्षा निराकृता वेदितव्याः । **ननु** सर्वभूतगुहाशयत्वे ब्रह्मणो मानसवेद्यत्वं स्यात्तथा सर्वात्मत्वे प्रपञ्चात्मत्वप्राप्तिरिति शङ्कायामाह—यत्सर्वविषयातीतमिति । सर्वमविद्यातत्कार्यात्मकं विषयमतीत्य[2] व्यवस्थितमित्यक्षरार्थः । 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वर'मित्यादिश्रुतेः परमेश्वराधिष्ठितमायाविवर्तत्वावगमात् । सर्वस्य मायायाश्चानिर्वचनीयत्वान्न परमार्थं किमपि ब्रह्मणो भिन्नं वस्त्वस्ति तथा तत् सर्वान्तःकरणतत्प्रचारसाक्षिणो न मानसवेद्यत्वं संभाव्यते । नहि मिथ्यादृष्टिगृहीतेन मरीच्युदकादिना भूम्याद्युदकादिमत्परमार्थतो भवति । नवा काष्ठेनाग्निः प्रकाश्यते दह्यते वा । अतो युक्तं सर्वविषयातीतत्वमिति भावः । तथाच श्रुतिः 'नेतिनेति', 'नेहनानास्ति किंचन'-'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सहे' त्याद्या । अत्र चैतन्यमि,

१ एववेति भेदा. २ त्यावस्थित.

त्यादिविशेषणत्रयं तत्वंपदार्थसाधारणं, सर्वभूतगुहाशयमिति च बुद्ध्यादिसाक्षी त्वंपदार्थ उक्तः, सर्ववित्पदेन तत्पदवाच्यं ब्रह्मोच्यते, सर्वविषयातीतमिति तत्पदलक्ष्यमुक्तम्, यत्तच्छब्दयोः सामानाधिकरण्यादेकार्थवृत्तित्वे सति तत्त्वंपदार्थयोरैक्यमखण्डवाक्यार्थस्तात्पर्यवृत्त्या प्रतिपादितो भवति । तदेवं मङ्गलाचरणव्याजेन वेदान्तशास्त्रीयविषयाद्यनुबन्धोऽप्यत्र प्रपञ्चितोऽस्य तत्प्रकरणत्वद्योतनाय । तथाहि । उक्तवाक्यार्थो विषयश्चैतन्यं सर्वविषयातीतमिति च चिदात्मनः सर्वानर्थसंस्पर्शित्वाभावोक्तेरशेषानर्थनिवृत्त्युपलक्षितं निरतिशयानन्दाविर्भावात्मकं ब्रह्मैव प्रयोजनमुक्तम् । अर्थात्तत्कामोऽधिकारी सूचित एव भवति । उक्तविशेषणानां वेदान्तेष्वेव प्रसिद्धेः शास्त्रब्रह्मणोः प्रतिपाद्यप्रतिपादकभावः संबन्धो ध्वनित इति ॥ १ ॥

एवं देवतानमस्कारव्याजेन वेदान्तप्रतिपाद्यपरदेवतातत्त्वमुपक्षिप्तम्, इदानीं वेदानां तत्परत्वं प्रतिपादयितुं कर्मकाण्डनिर्वृत्तमर्थमनूद्य तेन ज्ञानकाण्डाख्यवेदान्तानां संगतिमभिदधानस्तेषामगतार्थत्वमनन्यशेषत्वं च तावदाह—

**समापय्य क्रियाः सर्वा दाराग्न्याधानपूर्विकाः ।**
**ब्रह्मविद्यामथेदानीं वक्तुं वेदः प्रचक्रमे ॥ २ ॥**

**समापय्येति** ॥ वेद इदानीं ब्रह्मविद्यां वक्तुं प्रचक्रम इत्यन्वयः । इदानीमिति जिज्ञासोरुपस्थितिसमय उक्तः । अथेति जिज्ञासाप्रवृत्तिप्रयोजकहेतुसाधनचतुष्टयसंपत्त्यानन्तर्यमुच्यते । तथाच विवेकवैराग्यशमादिसाधनसंपन्नस्य मुमुक्षोर्मोक्षसाधनब्रह्मविद्यां साक्षात्प्रतिपादयितुं ज्ञानकाण्डात्मको वेदः प्रवर्तत इत्यर्थः । कुतोऽस्य साधनसं-

---

१ वेदान्तानां.

पत्तिरित्यपेक्षायां कर्मकाण्डोक्तकर्मानुष्ठानजनितबुद्धिशुद्धित इत्यभिप्रेत्याह—समापय्येत्यर्धेन । दाराग्न्याधानपूर्विका इति विहितक्रियामात्रोपलक्षणम् । नित्यनैमित्तिकप्रायश्चित्तोपासनारूपाः सर्वाश्रमप्रयुक्ता विधिविहिताः सर्वाः क्रियाः समापय्य समाप्तिं प्रापय्य कर्मकाण्डात्मनानुष्ठेयकर्माणि प्रतिपाद्य स्थितो वेद इति संबन्धः । अयं भावः—वेदो हि स्वतःप्रमाणभूतः सर्वार्थप्रकाशको नित्यनिरतिशयपुरुषार्थमर्थयमानस्य तदुपायं मृगयतः सर्वोत्साहं प्रयतमानस्यापि तमलभमानस्य तादृक्पुरुषार्थसाधनं प्रत्यक्षादिभिरनवगम्यमानमुपदेष्टुं प्रवर्तते । नित्यनिरतिशयपुरुषार्थश्च मोक्ष एव नान्य इति मोक्षोपायप्रतिपादने वेदतात्पर्यमवगम्यते । श्रुतिस्मृती चात्र भवतः 'सर्वे वेदा यत्पदमामनन्ति','सर्वे वेदा यत्रैकीभवन्ति','स मानसीन आत्मा जनाना'मिति, 'वेदैश्च सर्वैरहमेव वेद्य' इतिच। मोक्षसाधनं च साक्षादात्मतत्त्वज्ञानमेव । 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये' तिश्रुतेस्तच्च नाशुद्धान्तःकरणस्योपदेष्टुं युक्तं तस्य तद्ग्रहणसामर्थ्याभावात् । श्रुतिश्च भवति 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुया'दिति । अतस्तस्य ज्ञानोत्पत्तिप्रतिबन्धकदुरितक्षयार्थानि नित्यानि कर्माणि प्रथमं विद्यन्ते, तानि च संयोगरूपचोदनासमाख्यानामविशेषेण सर्वशाखाप्रत्ययन्यायेनेतिकर्तव्याङ्गकलापपरिमाणाधिकारिविशेषोक्तिपूर्वकमनुष्ठापयति । 'धर्मेण पापमपनुदति', 'न कर्म लिप्यते नरे', 'अविद्यया मृत्युं तीर्त्वे' त्यादिश्रुतेर्दुरितक्षय एव धर्मानुष्ठानस्य परं प्रयोजनं, परम्परया परमपुरुषार्थोपयोगित्वात् नतु 'कर्मणा पितृलोक' इत्याद्युक्तः पितृलोकादिः प्रयोजनम्, तस्य क्षयादिदोषदुष्टतया हेयत्वात् । आनुषङ्गिकं हि तत्कर्मफलं भवति । भवदपि नेदं चित्तशुद्धिप्रतिबन्धकम् ।

तदुक्तं सुरेश्वराचार्यैः—'नित्येषु शुद्धिप्राधान्याद्भोगोऽप्यप्रतिबन्धकः । भोगं भङ्गुरमीक्ष्यन्ते बुद्धिशुद्धिस्तु रोचत' इति। काम्याभिचारादिकर्मविधानं तु पुरुषवशीकरणेन स्वाभाविकप्रवृत्तिनिवारणार्थमित्येषा दिक् । तथाच चित्तशुद्धेः प्रथमापेक्षितत्वात्तदर्थं कर्मविधानं प्रथमं प्रवर्तते पश्चाच्च ज्ञानोपदेश इति कर्मज्ञानकाण्डयोरर्थद्वारा हेतुहेतुमद्भावेन पौर्वापर्यसंबन्ध उक्तः । ज्ञानकाण्डस्य साक्षात्फलार्थविषयत्वात्कर्मभिरनपेक्षितार्थत्वाच्चागतार्थत्वमनन्यशेषत्वं च तस्य सिद्धमिति ॥ २ ॥

ननु कर्माणि कृतानि कर्तुः फलप्रदानि लोके दृष्टानि । यथा पित्रादिभिरुपदिष्टविषयाणीष्टफलानि, तैर्निषिद्धविषयान्यनिष्टफलानि, तदुदास्तविषयाणि दैवाधीनतयोभयार्थानि । तथा वेदविहितानि कर्माणीष्टफलानि, निषिद्धान्यनिष्टफलानि, विहितप्रतिषिद्धव्यामिश्रकर्माणीष्टानिष्टव्यामिश्रफलानि भवन्ति । तथाच शास्त्रं 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फल' मिति । एवंच कर्मणां फलाव्यभिचारान्मोक्षस्य च फलविशेषत्वात्कर्मविशेषसाध्यत्वोपपत्तेर्न विद्यया कृत्यमस्तीति न तदर्थानि ज्ञानकाण्डानि मुमुक्षुणा विचारणीयानि, किंतु कर्माण्येव कानिचिच्चातुर्मास्यादीन्यक्षय्यफलार्थान्यनुष्ठेयानीति कर्मजडानां प्रत्यवस्थानमित्याशङ्क्याह—

**कर्माणि देहयोगार्थं देहयोगे प्रियाप्रिये ।**
**ध्रुवे स्यातां ततो रागो द्वेषश्चैव ततः क्रियाः ॥ ३ ॥**

**कर्माणीति द्वाभ्याम्** ॥ कर्मफलं हि जात्यायुर्भोगलक्षणं, तच्च देहसंबन्धंविना नोपपद्यत इति कर्माणि देहयोगार्थमेवेत्यर्थः । देहयोगे च संसारो दुर्वार इत्याह—देहयोग इति । देहसंबन्धे सति

प्रियाप्रिये सुखदुःखे ध्रुवे स्यातां भवेतामेव । 'न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती' तिश्रुतेः । ततः सुखदुःखयोस्तत्साधनयोश्च यथासंख्यं रागद्वेषौ वासनारूपौ स्याताम् । ततो रागद्वेषाख्यान्निमित्तात्क्रिया वाङ्मनःकायचेष्टाः स्युरित्यर्थः ॥ ३ ॥

**धर्माधर्मौ ततो ज्ञस्य देहयोगस्तथा पुनः ।**
**एवं नित्यप्रवृत्तोऽयं संसारश्चक्रवद्भृशम् ॥ ४ ॥**

अज्ञस्य प्रत्यगात्मतत्त्वं ब्रह्माजानतोऽहंकारपारवश्यस्य ततः क्रियाभ्यो विहितप्रतिषिद्धरूपाभ्यो धर्माधर्मौ पुनर्भवेताम् पुनस्ततो देहयोगस्ततः प्रियाप्रिये इत्येवं संसारो जन्ममरणकर्मकरणतत्फलभोगलक्षणः कुलालचक्रवद्भृशमत्यर्थमविश्रमं यथा स्यात्तथा नित्यप्रवृत्तोऽनादिकालमारभ्य प्रवर्तते अयं प्रत्यक्ष इत्यर्थः । तस्मादैहिकार्थानां कर्मणामनित्यफलत्वस्य लोके दृष्टत्वादामुष्मिकफलार्थानामपि कर्मत्वादनित्यफलतानुमानात् 'तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयत' इति वस्तुबलावलम्बिश्रुतेश्च 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृत' मित्याद्यर्थवादश्रुत्यवलम्बनेन कर्मफलस्य नित्यत्वाशा न कार्येति भावः ॥ ४ ॥

नन्वेवमपि न मोक्षार्थिनो ज्ञानेन प्रयोजनमस्ति, कृतकर्मणां संसारनिमित्तानां फलभोगानन्तरं नाशेसति 'निमित्ताभावान्नैमित्तिकाभाव' इति न्यायादयत्नलभ्यत्वान्मोक्षस्येत्याशङ्क्याज्ञानमूलत्वात्कर्मणस्तस्मिन्सति तदनुपरमान्नैवमित्याह—

**अज्ञानं तस्य मूलं स्यादिति तद्धानमिष्यते ।**
**ब्रह्मविद्यात आरब्धा ततो निःश्रेयसं भवेत् ॥ ५ ॥**

---

१ कर्मचितः—पुण्यचितः इत्यपि पाठः.

**अज्ञानमिति** ॥ यद्वा अज्ञस्य कर्मप्रवृत्त्यविरमात्संसाराविरमः कृतकर्मफलभोगसमयेऽपि कर्मप्रवृत्त्यवश्यंभावात्पुनर्भोगसंतानाविच्छेदश्चेत्कथं तर्हि कर्मनिवृत्त्या मोक्षसिद्धिरिति विवक्षायामाह—अज्ञानमिति । अयमर्थः—'नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति', 'एकः शत्रुर्न द्वितीयोऽस्ति शत्रुरज्ञानतुल्यः पुरुषस्य राजन् । येनाविष्टः कुरुते कार्यते च घोराणि कर्माणि सुदारुणानी' त्यादिश्रुतिस्मृतिभ्योऽज्ञानं तस्य पूर्वोक्तस्य कर्मतत्फललक्षणस्य संसारस्य मूलं स्यादिति हेतोस्तस्याज्ञानस्य हानमात्यन्तिकोपरम इष्यते यत्नेन संपादनीयतयाभिप्रेयते, मूलोन्मूलनमन्तरेण प्ररोहाविच्छेदादित्यर्थः । 'तरति शोकमात्मवित्', 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति', 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवज्ज्ञानं प्रकाशयति तत्पर' मित्यादिश्रुतिस्मृतिभ्यो यतोऽविद्यैवाज्ञानहानहेतुरवगतातो ब्रह्मविद्यारब्धा, अतो ब्रह्मविद्यया निःश्रेयसं कैवल्यं भवेत्तदुदये नान्तरीयकतयाऽज्ञाननिवृत्तौ केवलात्मस्वरूपावस्थानरूपो मोक्षो लब्ध इव भवेदित्यर्थः ॥ ५ ॥

ननु कर्मणां विचित्रशक्तित्वात् 'हिरण्यदा अमृतत्वं भजन्त' इत्यादिश्रुतेः 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इत्यादिस्मृतेश्च कर्मभिरेव मोक्षसिद्धेः कथं तं ब्रह्मविद्ययेति शङ्कामपाकुर्वन्ननन्तरोक्तमर्थमुपपादयति—

**विद्यैवाज्ञानहानाय न कर्माप्रतिकूलतः ।**
**नाज्ञानस्याप्रहाणे हि रागद्वेषक्षयो भवेत् ॥ ६ ॥**

**विद्यैवेति द्वाभ्याम्** ॥ संसारमूलाज्ञानहानाय विद्यैव समर्थेत्य-

ध्याहारः। एवकारार्थमाह—न कर्मेति। तत्र हेतुरप्रतिकूलत इति। अविरोधादित्यर्थः। विद्यैव प्रकाशरूपत्वादप्रकाशरूपामविद्यां तत्कार्यं च निवर्तयति। यथा रज्ज्वावरणाविद्यां तमसि तत्कल्पितसर्पाद्याकारं च रज्जुतत्त्वज्ञानप्रदीपौ निवर्तयतः स्वभावविरोधात्। कर्म तु नाज्ञानतमोनिवर्तकं तदविरोधित्वादप्रकाशात्मकत्वाद्वा नीहारस्तोमवदित्याद्यनुमानैः 'नान्यः पन्था विद्यतेऽयनाय' इत्यादिश्रुतिभिश्च विरोधाद्धिरण्यदा इत्यादावापेक्षिकममृतत्वं पर्यवस्यति। 'कर्मणैव ही' ति स्मृतिः 'न कर्मणा न प्रजये' तिश्रुतिविरोधेऽन्यपरेत्यतो न तद्बलात्कर्मभिरज्ञानहानशङ्केत्यभिप्रायः। विद्यां विनाऽज्ञानक्षयाभावश्चेदज्ञानक्षयार्थमेव विद्यान्विष्यतां तत्कार्यस्य तु परमार्थत्वाद्विद्यया नाशानुपपत्तेस्तन्नाशे हेत्वन्तरमन्वेषणीयमित्यत आह—नाज्ञानस्येति। अज्ञानस्याप्रहाणे रागादिक्षयो न स्यादविवेकपूर्वकत्वस्य रागादावन्वयव्यतिरेकसिद्धत्वादज्ञानमया रागादयो न परमार्था इत्यज्ञाननिवृत्त्यैव निवर्तन्त इति न तत्र हेत्वन्तरान्वेषणेत्यर्थः॥ ६॥

रागाद्यनिवृत्तौ का हानिरिति तत्राह—

**रागद्वेषक्षयाभावे कर्म दोषोद्भवं ध्रुवम्।**
**तस्मान्निःश्रेयसार्थाय विद्यैवात्र विधीयते॥ ७॥**

**रागद्वेषेति**॥ दोषा रागद्वेषमोहास्तदुद्भवं तद्धेतुकं कर्म ध्रुवं पुनः स्यादेवेति पुनः संसारो दुर्वार इत्यर्थः। उपपादितमर्थमुपसंहरति—तस्मादिति। अत्रेति वेदान्तोक्तिः। विधीयते प्रकाश्यत इत्यर्थः॥७॥

तदेवमज्ञानमूलत्वात्संसारस्य ज्ञानमेव तन्निवर्तकं मोक्षहेतुर्न कर्मेत्युक्तं तत्र यदि कर्मणां स्वातन्त्र्येण मोक्षहेतुता न संभवेत्तर्हि ज्ञानेन समुच्चयेसति तद्धेतुता स्यादिति समुच्चयवादिमतमुत्थापयति—

**ननु कर्म तथा नित्यं कर्तव्यं जीवने सति ।**
**विद्यायाः सहकारित्वं मोक्षं प्रति हि तद्व्रजेत् ॥८॥**

**ननु कर्मेति ॥** 'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् । कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणै' रिति स्मृत्युक्तन्यायेनावशेनापि जीवता पुरुषेण कर्म कर्तव्यमेव । 'विद्या यथा तथा नित्यं कर्मावश्यं कर्तव्यं यावज्जीव' मित्यादिश्रुतिविहितत्वादित्यर्थः । विद्याया उपयोगाभावान्मुमुक्षुणा नित्यं कर्म न कर्तव्यमित्यत आह—विद्याया इति । विद्याया मोक्षंप्रति कारणभूतायाः सहकारित्वमितिकर्तव्यभावं हि यस्मात्तत्कर्म व्रजेत्प्राप्नुयादतस्तत्कार्यं मुमुक्षुणेत्यर्थः । 'विद्ययामृतमश्नुत' इति तृतीयया ज्ञानस्य मोक्षकरणत्वावगमात्करणस्य चेतिकर्तव्यतासापेक्षत्वादन्यस्य चेतिकर्तव्यस्यात्राभावात्कर्मभिरेव प्रयाजादिभिर्दर्शादीव फलोपकार्यङ्गैर्ज्ञानं समुच्चीयत इति भावः ॥ ८ ॥

'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिन' इत्यादिस्मृतेर्मुमुक्षुभिः कर्म न कर्तव्यमिति चेत्तत्राह—

**यथा विद्या तथा कर्म चोदितत्वाविशेषतः ।**
**प्रत्यवायस्मृतेश्चैव कार्यं कर्म मुमुक्षुभिः ॥ ९ ॥**

**यथा विद्येति ॥** यथा विद्या मुमुक्षुभिः कार्या तथा कर्मापि कर्तव्यम् । कुतः । 'विद्यां चाविद्यां च यस्तद्वेदोभयꣳसहे' ति समुच्चयविधिना अविशेषेण चोदितत्वादित्यर्थः । किंच 'अकुर्वन्विहितं कर्म निन्दितं च समाचरन् । प्रसंजंश्चेन्द्रियार्थेषु नरः पतनमृच्छति ॥' इत्यननुष्ठाने प्रत्यवायस्मृतेश्च कर्म कार्यमित्यर्थः । तथाचोदाहृतश्रु-

तिस्मृतिविरोधे 'तस्मात्कर्म न कुर्वन्ति यतय' इतीयमपि स्मृतिर्ज्ञान-प्रशंसार्था वा भविष्यतीति भावः ॥ ९ ॥

अत्र सिद्धान्ती विद्यायाः सहकार्यपेक्षितत्वमुक्तमाक्षिपति—

**ननु ध्रुवफला विद्या नान्यत्किंचिदपेक्षते ।**
**नाग्निष्टोमो यथैवान्यद्ध्रुवकार्योऽप्यपेक्षते ॥ १० ॥**

**नन्विति** ॥ ब्रह्मविद्या सहकारिनिरपेक्षा ध्रुवफलत्वाद्घटादिज्ञानवदित्यर्थः । पूर्ववादी व्यभिचारेण परिहरति—नेति । अवश्यंभाविफलोऽप्यग्निष्टोमो यथोद्गीथशस्त्रादितद्गतदेवताज्ञानसहकारिकर्मापेक्षते तथा विद्यापीत्यर्थः ॥ १० ॥

पूर्वपक्षमुपसंहरति—

**तथा ध्रुवफला विद्या कर्म नित्यमपेक्षते ।**
**इत्येवं केचिदिच्छन्ति न कर्म प्रतिकूलतः ॥ ११ ॥**

**इत्येवं केचिदिच्छन्तीति** ॥ सिद्धान्तं वक्तुमुपक्रमते—नेत्यादिना । विद्या स्वकार्ये न कर्मापेक्षते तत्प्रतिकूलत्वात्तद्विरोधित्वादितियावत् । नहि स्वप्रतिकूलः स्वसहायो भवति । माभूत्तिमिरं तेजसः सहायभूतमित्यर्थः ॥ ११ ॥

कर्मणो विद्याप्रतिकूलत्वमुक्तं साधयति—

**विद्यायाः प्रतिकूलं हि कर्म स्यात्साभिमानतः ।**
**निर्विकारात्मबुद्धिश्च विद्येतीह प्रकीर्तिता ॥ १२ ॥**

**विद्याया इत्यर्धेन** ॥ हिशब्दः प्रसिद्धिद्योतकः । साभिमानत इति ब्राह्मण्याद्यभिमानसहितपुरुषनिर्वर्त्यत्वात्कर्मणो विद्यायाश्च कूटस्थात्मा-

कारतया जात्याद्यभिमानहीननिष्ठत्वात्प्रसिद्धो विद्याकर्मणोर्विरोध इत्यर्थः । हिशब्दद्योतितां प्रसिद्धिमुपपादयति—निर्विकारेति । नाहं कर्ता भोक्ता किंतु कूटस्थं ब्रह्मैवास्मीत्येवमात्माकारान्तःकरणवृत्तिर्विद्येति इह वेदान्तेषु विद्वद्भिः प्रकर्षेणोक्तेत्यर्थः । कर्मत्वहं ब्राह्मणोऽस्य कर्मणः कर्ता ममेदं कर्मसाध्यं फलं भविष्यतीत्यभिमानपूर्वकं प्रवर्तत इति प्रत्यक्षमतः स्फुटो विरोध इत्यर्थः ॥ १२ ॥

ज्ञानकर्मणोरन्तर्मुखत्ववहिर्मुखत्वाभ्यां प्रवृत्तितो विरोधमुक्त्वोत्पत्तितो विरोधमाह—

**अहं कर्ता ममेदं स्यादिति कर्म प्रवर्तते ।**
**वस्त्वधीना भवेद्विद्या कर्त्रधीनो भवेद्विधिः ॥ १३ ॥**

**वस्त्वधीनेति** ॥ प्रमाणवस्त्वधीना विद्या यथाप्रमाणं यथावस्तु च जायते न तत्र पुरुषस्वातन्त्र्यं संभवतीत्यर्थः । विधिर्विधेयं कर्म कर्त्रधीनं पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यमतः पुरुषस्वातन्त्र्यास्वातन्त्र्यरूपविरुद्धहेतुजन्यत्वान्न कर्मज्ञानयोः समुच्चय इत्यर्थः ॥१३॥

किंच विद्यायां सत्यां कर्मणो निराश्रयतया स्वरूपालाभान्न ज्ञानसहकारितेति विध्यन्तरेण विरोधमाह—

**कारकाण्युपमृद्नाति विद्या बुद्धिमिवोखरे ।**
**इति तत्सत्यमादाय कर्म कर्तुं व्यवस्यति ॥ १४ ॥**

**कारकाणीति** ॥ ऊखरदेशे जातामुदकबुद्धिं यथोखरस्वभावावलम्बिनी विद्योपमृद्नाति तथात्मन्यविद्याध्यस्तकारकबुद्धिमात्मस्वभावावलम्बिनी विद्योपमृद्नात्येवेत्यर्थः । इति तत्सत्यमित्यर्धश्लोकः पूर्वेणैवान्वेति । उपमृद्नातीति यतोऽतस्तत्कारकजातं सत्यमादाय कर्म कर्तुं ज्ञानी कथं व्यवस्यतीति कथंशब्दाध्याहारेणायं योजनीयः ॥ १४ ॥

विरुद्धत्वकृतसमुच्चयासंभवे फलितमाह—

**विरुद्धत्वादतः शक्यं कर्म कर्तुं न विद्यया ।**
**सहैव विदुषा तस्मात्कर्म हेयं मुमुक्षुणा ॥ १५ ॥**

**विरुद्धत्वादिति ॥** अतो विरुद्धत्वादिति सामानाधिकरण्यम् । विद्यया सह कर्म कर्तुं विदुषा न शक्यमेवेत्यन्वयः । समुच्चयनिराकरणफलमाह—तस्मादिति ॥ १५ ॥

ननु 'ज्ञात्वा कर्म समाचरे' दित्यादिवचनात्स्वर्गकामादिविध्यन्यथानुपपत्तेश्च देहादिव्यतिरिक्तात्मज्ञानवतः कर्मानधिकारात् ज्ञानकर्मणोर्विरोधे च तदयोगादधिकार्यभावेन कर्मकाण्डस्याप्रामाण्यं प्राप्तमित्याशङ्क्य कर्मस्वरूपभेदाङ्गविशेषप्रयुक्तक्रमाधिकारादिविशेषज्ञानस्य देहादिव्यतिरिक्तात्मज्ञानस्य च कर्मविशेषाधिकारिण्यपेक्षितत्वेऽपि न परमात्मतत्त्वज्ञानं तत्रापेक्ष्यतेऽनुपयोगादधिकारिविरोधाच्चेत्यभिप्रेत्य समाधत्ते—

**देहाद्यैरविशेषेण देहिनो ग्रहणं निजम् ।**
**प्राणिनां तदविद्योत्थं तावत्कर्मविधिर्भवेत् ॥ १६ ॥**

**देहाद्यैरिति ॥** यद्वा यद्यौपनिषदं ज्ञानं कर्मकारकभेदोपमर्दकं स्यात्तदा ज्ञानकाण्डेन कर्मकाण्डस्य निर्विषयीकरणाद्बाधितविषयं कर्मकाण्डमप्रमाणं स्यात्तच्चानिष्टं स्वाध्यायाध्ययनविधिविरोधादित्याशङ्क्य किमात्मतत्त्वज्ञानात्प्रागूर्ध्वं वा तदप्रामाण्यापत्तिरिति विकल्प्याद्यं निराकरोति—देहाद्यैरिति । देहिन आत्मनो देहाद्यैरिन्द्रियमनोबुद्धिप्राणतद्धर्मैरविशेषेणाविवेकेन ग्रहणं तद्विशिष्टतयैवात्माभिमानरूपं निजं स्वाभाविकं न योषिदादावग्न्यादिभावबुद्धिवद्विध्यधीनं यदेवंविधं प्रा-

णिनामात्मज्ञानं तदविद्योत्थमनाद्यज्ञानजभ्रान्तिसंस्कारोत्थं सर्वसाधारणत्वाद्यावदेवं ब्राह्मणोऽहं गृहस्थोऽहं सकलेन्द्रियवानहं सकामो बलवानित्यादिज्ञानमनुवर्तते तावत्कर्मविधिः कर्मकाण्डं प्रमाणं भवेदित्यर्थः । प्रमितिजनकं हि प्रमाणं भवति अधिकारिणश्च प्रमितिजनको वेदो नानधिकारिण इति स्थिते कर्मप्रवृत्तिपर्यन्तं प्रमितिजनकस्य विधिकाण्डस्योक्ताधिकारिलाभान्न ब्रह्मात्मतत्त्वविद्योदयात्प्रागप्रामाण्यप्राप्तिरिति नाध्ययनविधिविरोध इति भावः ॥ १६ ॥

द्वितीयं विकल्पमिष्टापत्त्या प्रत्याचष्टे—

**नेतिनेतीति देहादीनपोह्यात्मावशेषितः ।**
**अविशेषात्मबोधार्थं तेनाविद्या निवर्तिता ॥ १७ ॥**

**नेतीति** ॥ नेतिनेतीति वीप्सार्थया श्रुत्या देहादीन्मिथ्यादृष्ट्यात्मात्मीयभावेन गृहीतानशेषानपोह्य प्रतिषिध्य प्रतिषेधावधिभूत आत्मावशेषितः 'सत्यस्य सत्य'मित्यादौ । किमर्थमित्यत आह—अविशेषात्मबोधार्थमिति । अविशेषश्चासावात्मा चेति तथा । तस्य बोधो निर्विशेषचित्सदानन्दस्वभावाविर्भावस्तदर्थमित्यर्थः । परागर्थेष्वपोहितेषु तदवधित्वेन प्रत्यगर्थ एवावशिष्यत इति प्रत्यक्तत्त्वबोधार्थमित्युक्तं भवति । बोधेसति किं स्यात्तदाह—तेनेति । यन्निबन्धनो देहादावात्माभिमानः कर्माधिकारहेतुः साऽविद्या तेन बोधेन निवर्तिता बाधितेत्यर्थः । अतो 'निमित्ताभावान्नैमित्तिकाभाव' इतिन्यायेनात्मतत्त्वज्ञानवतो न कर्मविधिप्रतिपत्तिरिति तंप्रति फलवद्विज्ञानजनकत्वाभावात्कर्मकाण्डस्य तदानीमप्रामाण्यमिष्टमेव । निवृत्ततीव्रक्रोधं प्रत्यभिचारविधिशास्त्रवदिति सर्वमनवद्यम् ॥ १७ ॥

ननु निर्विशेषात्मबोधेन सकृन्निवर्तिताप्यविद्या पुनरुद्भविष्यति ततः

कर्माधिकारहेतुसंभवात्कर्मविधिः स्याच्छुक्तितत्त्वावगमात्तदज्ञाननिवृत्तावपि पुनस्तत्र समयान्तरे रजतभ्रमोदयोपलम्भादित्याशङ्क्याह—

**निवृत्ता सा कथं भूयः प्रसूयेत प्रमाणतः ।**
**असत्येवाविशेषेऽपि प्रत्यगात्मनि केवले ॥ १८ ॥**

**निवृत्तेति** ॥ प्रमाणतो निवृत्ता प्रमाणाग्निना दग्धा साऽविद्या भूयः पुनः कथं प्रसूयेत जायेत । नहि मृता दग्धा च भार्या पुनः प्रसवायोद्भवति तद्वदित्यर्थः । अविद्यान्तरं जायेतेति चेत्तत्र वक्तव्यं किं निर्निमित्तं जायेत निमित्ताद्वा । नाद्यः । अकारणकार्योत्पत्तावतिप्रसङ्गात् । द्वितीये किमात्मा निमित्तमनात्मा वा । नाद्य इत्याह —असत्येवेति । अविशेषे केवले इत्यनयोर्व्याख्यानव्याख्येयभावः । यद्वाऽविशेष इत्युक्ते मूर्त्यादिकतिपयविशेषाभावेऽपि विशेषान्तरशङ्का स्यादत उक्तं केवल इति । तावत्युक्त एकाकिनोऽप्यात्मनः प्रयत्नादिगुणयोगित्वविशेषशङ्का स्यात्तन्निवृत्तयेऽविशेष इत्युक्तम् । तथाचाविशेषे केवले प्रत्यगात्मनि सर्वान्तरे परमार्थवस्तुनि साऽविद्याऽसती एव न सत्तां लभते । असहायस्यात्मनः कूटस्थस्य कर्तृत्वानुपपत्तेः । अविद्यान्तरसहायाभ्युपगमे चान्योन्याश्रयोऽनवस्था वा प्रसज्येतेत्यर्थः । अपिशब्देन पक्षान्तरं निरस्यते । अनात्मन्यप्यसत्येव साविद्या कार्यस्यानात्मनोऽविद्याहेतुत्वानुपपत्तेरित्यर्थः । शुक्तिकादौ तु रजतादिविक्षेपोपादानांशस्यैवाविद्याशक्तिभेदस्य ज्ञानेन निवृत्त्यभ्युपगमात् मूलाज्ञानस्य तादृगनन्तशक्तिमतो विद्यमानत्वात्तद्वशात्पुनर्भ्रान्त्युदयोपपत्तेर्दृष्टान्तो विषम इति द्रष्टव्यम् ॥ १८ ॥

अविद्यायाः पुनरनुद्भवसाधनफलमाह—

**न चेद्भूयः प्रसूयेत कर्ता भोक्तेति धीः कथम् ।**
**सदस्मीति च विज्ञाने तस्माद्विद्याऽसहायिका ॥१९॥**

**नचेदिति पादत्रयेण ॥** सदेव ब्रह्मैवाहमस्मीति विज्ञाने विशिष्टज्ञानेऽपरोक्षानुभवे सति भूयः पश्चान्न चेदविद्या प्रसूयेतेति कर्ता भोक्तेति धीः कर्माधिकारनिमित्तभूता कथं स्यान्न स्यादेवेत्यर्थः । चकारः कर्तृत्वादेः पारमार्थिकत्वशङ्कानिवृत्त्यर्थः । कर्तृत्वादेः पारमार्थिकत्वे विद्यानिवर्त्यत्वायोगादनिर्मोक्षप्रसङ्ग इति भावः । ज्ञानकर्मसमुच्चयनिराकरणमुपसंहरति—तस्मादिति । यस्माद्विद्यायामुत्पन्नायां कर्मासंभवः सिद्धस्तस्मादसहाया केवलैव विद्या कैवल्यहेतुरित्यर्थः ॥१९॥

विद्यायाः सहकारिनिरपेक्षत्वेनैव मोक्षहेतुत्वमिति युक्त्योक्तेर्थे श्रौतं लिङ्गमुपोद्बलयति—

**अत्यरेचयदित्युक्तो न्यासः श्रुत्यातएव हि ।**
**कर्मभ्यो मानसान्तेभ्य एतावदिति वाजिनाम्॥२०॥**
**अमृतत्वं श्रुतं यस्मात्त्याज्यं कर्म मुमुक्षुभिः ।**

**अत्यरेचयदिति ।।** तैत्तिरीयोपनिषत्सु 'सत्यं परं परं सत्य' मित्युपक्रम्य 'सत्यं तप' आदिमानसान्तानि कर्माणि श्रेयःसाधनत्वेन निर्दिश्य 'तानि वा एतान्यवराणि तपांसी' ति तेषां फल्गुफलत्वेन निन्दामभिधाय 'न्यास इति ब्रह्मेत्युक्तो न्यास एवात्यरेचय' दिति तत्त्वज्ञानान्तरङ्गभूतः संन्यासः स्तूयते । तस्मान्निन्दितस्यानुपादेयत्वात्स्तुतस्य चोपादेयत्वात्कर्मसापेक्षत्वे मोक्षस्य संन्यासविधानानुपपत्तेः ससंन्यासमात्मज्ञानमेव मोक्षसाधनं गम्यत इत्यर्थः । अतएव हीति । ज्ञानस्य स्वफले कर्मनिरपेक्षत्वादेवेत्यर्थः । लिङ्गान्तरमाह—एतावदिति । वाजिनाममृतत्वं श्रुतमिति । वाजसनेयिनामुपनिषत्सु 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदित' मित्युपक्रम्याद्वयमात्मतत्त्वं दुन्दुभ्यादिदृष्टान्तप्रबन्धेनोपपाद्य 'उक्तानुशासनासि मैत्रे-

स्येतावदरे खल्वमृतत्व' मिति ज्ञानस्यैवामृतत्वसाधनत्वावधारणं श्रुतं तस्य कर्मानपेक्षायां लिङ्गमन्यथैतावदित्यवधारणार्थवचनानुपपत्तेरित्यर्थः। 'अमृतत्वस्य तु नाशोऽस्ति वित्तेने' ति च तत्रोक्तो वित्तसाध्यस्य कर्मणोऽमृतत्वसाधनत्वाभावे लिङ्गमनुसंधेयम् । नच 'विद्यां चाविद्यां चे'ति समुच्चयविधानविरोधः तस्य देवतोपासनज्ञानकर्मसमुच्चयविषयत्वात् । अन्यथा 'हिरण्मयेन पात्रेण', 'अग्ने नय सुपथे' ति च मार्गयाचनाद्यनुपपत्तेरिति सर्वमनवद्यम् । 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः', 'त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् । त्यजेतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक् परं पद' मित्यादिशास्त्राद्यस्मात्त्यागोपलक्षितमात्मज्ञानमेव मुक्तिसाधनं तस्मादिति प्रकृतार्थमुपसंहरति । तस्मात्त्याज्यं कर्म मुमुक्षुभिः साधनचतुष्टयसंपन्नैरात्मतत्त्वजिज्ञासुभिरित्यर्थः । विविदिषोरपि नास्ति कर्मावसरः कुतो विदुष इत्यभिप्रायः ॥ २० ॥

अत्रार्धश्लोकोऽधिकः प्रागुक्ताधिकार्धेन संख्येयः । तदेवं मुमुक्षुणा सर्वकर्मसंन्यासपूर्वकज्ञाननिष्ठेन भवितव्यमिति न्यायेनोपपाद्येदानीं परोक्तदृष्टान्तमनूद्य दूषयति—

**अग्निष्टोमवदित्युक्तं तत्रेदमभिधीयते ॥ २१ ॥**

**अग्निष्टोमवदिति** ॥ अर्धश्लोकेन ॥ २१ ॥

दूषणमुच्यत इति प्रतिज्ञाय श्लोकेन दूषणमाह—

**नैककारकसाध्यत्वात्फलान्यत्वाच्च कर्मणः ।**
**विद्या तद्विपरीतातो दृष्टान्तो विषमो भवेत् ॥२२॥**

**नैकेति** ॥ कर्मणोऽग्निष्टोमादेरनेककारकसाध्यत्वान्नियतद्रव्यमन्त्रतन्त्रप्रयोगसाध्यत्वादितियावत् । तथा फलान्यत्वात्फलभेदवत्त्वात् 'यदेव

विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'तिश्रुतेर्विद्याद्वारा वीर्यवत्तरफलविशेषसंभवाच्च युक्ता सहकार्यपेक्षेत्यर्थः। नैवं विद्याया इत्याह—विद्येति ॥ तद्विपरीता कर्मस्वभावविपरीतस्वभावेतियावत्। यथा वस्त्वधीनप्रमाणनिबन्धनाया निरतिशयमोक्षैकफलाया विद्याया न सहकार्यपेक्षा युक्तेत्यर्थः। यतएवं स्वभावभेदः कर्मविद्ययोरतोऽग्निष्टोमदृष्टान्तो विषमो दार्ष्टान्तिकाननुरूपो भवेदित्यर्थः॥ २२॥

वैषम्यमेवोपपादयति—

**कृष्यादिवत्फलार्थत्वादन्यकर्मोपबृंहणम्।**
**अग्निष्टोमस्त्वपेक्षेत विद्यान्यत्किमपेक्षते ॥ २३ ॥**

**कृष्यादिवदिति** ॥ अग्निष्टोमः सातिशयः साध्यफलार्थत्वादन्यकर्मोपबृंहणमन्यैः कर्मभिः सहकारिभिर्विहितोद्गीथाद्यङ्गसंश्रितोपासनादिरूपैरुपचयमपेक्षेतेति योजना। तत्र दृष्टान्तः कृष्यादिवदिति। कृषिवाणिज्यादौ फलोपचयार्थं साधनविशेषोपचयः प्रसिद्ध इत्यर्थः। विद्या तु निरतिशयफलत्वादन्यत्सहकारिभूतं किं वस्त्वपेक्षते, न किमपीत्यर्थः॥ २३॥

यदुक्तमकुर्वन्विहितं कर्मेति प्रत्यवायस्मृतेश्चेति तत्राह—

**प्रत्यवायस्तु तस्यैव यस्याहंकार इष्यते।**
**अहंकारफलार्थित्वे विद्येते नात्मवेदिनः ॥ २४ ॥**

**प्रत्यवायस्त्विति** ॥ अस्य कर्मणोऽहं कर्ता एतत्कृत्वेदं फलं भोक्ष्य इति यस्याहंकार इष्यते इष्टो भवति स्वाभाविको वर्तत इति यावत्। तस्याधिकृतस्य विहिताकरणे प्रत्यवायो भवेदित्यर्थः। आत्मवेदिन आत्मतत्त्वज्ञाननिष्ठस्य तु अहंकारफलार्थित्वेन विद्येते विषयाभावादतो निमित्ताभावान्न प्रत्यवायस्तस्येत्यर्थः॥ २४॥

'विद्यैवाज्ञानहानाय न कर्माप्रतिकूलत' इत्युपक्रम्येयता ग्रन्थेन कर्मणः स्वातन्त्र्येण वा ज्ञानसहकारितया वा सर्वथा न साक्षान्मोक्षहेतुत्वमस्तीत्युपपाद्य 'ब्रह्मविद्यामथेदानीं वक्तुं वेदः प्रचक्रम' इति परमप्रकृतमुपसंहरति—

**तस्मादज्ञानहानाय संसारविनिवृत्तये।**
**ब्रह्मविद्याविधानाय प्रारब्धोपनिषत्त्वियम् ॥ २५ ॥**

**तस्मादिति** ॥ विद्यायाः कर्मनिरपेक्षत्वं तच्छब्दार्थः। अज्ञानहानायानाद्यज्ञाननिराससिद्धयेऽपेक्षितब्रह्मविद्या विधातुं संपादयितुमयं परोपनिषद्वेदान्तभागः प्रारब्ध इति योजना। अज्ञानहानस्य विशेषणं संसारविनिवृत्तय इति। संसारस्य विनिवृत्तिः सम्यङ्निवृत्तिर्यस्मादिति विग्रहः। अक्लीबत्वमार्षम्। अत्रोपनिषच्छब्दो लक्षणया वेदान्तग्रन्थेषु प्रयुक्तः ॥ २५ ॥

तर्हि कोऽस्य मुख्योऽर्थ इति विवक्षायां ब्रह्म विद्याख्यं शब्दसामर्थ्यं दर्शयन्नुपनिषच्छब्दव्युत्पादनेनापि स्वतन्त्रैव विद्या मोक्षहेतुरिति सूचयति—

**सदेरुपनिपूर्वस्य क्विपि चोपनिषद्भवेत्।**
**मन्दीकरणभावाच्च गर्भादेः शातनात्तथा ॥ २६ ॥**

**सदेरिति** ॥ 'षद्लृ विशरणगत्यवसादनेषु' इति धातोरुपनीत्युपसर्गद्वयपूर्वकस्य क्विप्प्रत्ययान्तस्योपनिषदिति रूपम्। अस्त्यत्र धात्वर्थत्रयम्। तथाहि ये मन्दब्रह्मविदस्तेषां गर्भजन्मजरादिकमुपनिषदयति शिथिलीकरोतीत्युपनिषदित्येकोऽर्थः। जिज्ञासोश्चोप समीपे नि निश्चयेन ब्रह्म गमयतीति द्वितीयः। तत्त्वविदां तु गर्भादि नाशयत्येवेति

तृतीयः । एवं सम्यग्धात्वर्थयोगाद्विद्यैवोपनिषच्छब्दवाच्या । तादर्थ्याद्ग्रन्थोऽप्युपनिषदुच्यते । लाङ्गलं जीवनमितिवदित्यर्थः ॥ २६ ॥

इति प्रथममुपोद्घातप्रकरणम्[1] ।

---

## प्रतिषेधप्रकरणम् २

तदेवं मुमुक्षोर्मोक्षसाधनब्रह्मात्मविद्याप्रतिपत्तये वेदान्तारम्भ उपपद्यते इतिस्थिते पुनराशङ्क्यते । ननु विद्योपदेशार्थे वेदान्तारम्भस्तदोपपद्यते यदि विद्योदयः संभाव्येत स इहात्मनि संसारित्वग्राहकप्रत्यक्षादिविरोधाद्वाक्यशतेनापि नोत्पादयितुं शक्यते, असंजातविरोधितया प्रत्यक्षादेर्बलवत्त्वात्तदुपजीविनश्चागमस्य दुर्बलत्वात्कथंचिदुत्पन्नापि विद्या यदि प्रमाणसिद्धं संसारं बाधेत तर्हि प्रत्यगात्मनोऽपि ब्रह्मरूपत्वं कथं प्रत्यक्षानुभवो न बाधेतेति, अत उत्तरं वदति—

**प्रतिषेद्धुमशक्यत्वान्नेतिनेतीति शेषितम् ।**
**इदं नाहमिदं नाहमित्यद्धा प्रतिपद्यते ॥ १ ॥**

**प्रतिषेद्धुमित्यादि** ॥ नेतिनेतीति वीप्सया सकलदृश्यप्रतिषेधे शेषितमुर्वरितं यदात्मतत्त्वं तत्प्रतिषेधावधित्वेन प्रतिषेद्धुः स्वरूपत्वेन प्रतिषेधसाक्षितयाऽवस्थितं यतोऽतः प्रतिषेद्धुमशक्यत्वादद्धा साक्षात्प्रतिपद्यते निःसंदिग्धमुपलभ्यत इति योजना । उपलम्भप्रकारमभिनयति—इदमिति । इदं देहरूपं नाहमात्मा इदमिन्द्रियजातं मनोबुद्धिप्राणतदुपादानचेतनपर्यन्तं नाहं किंत्वेषां प्रकाशकमव्यभिचारि स्वयंप्रकाशं कूटस्थमक्षरं यस्मिन्सर्वं जगदाश्रयेऽव्याकृताकाश

---

१ चैतन्यप्रकरणमिति टीकान्तरे पाठः.

ओतश्च प्रोतश्च तदेवाहं परमक्षरमिति प्रतिपद्यत इत्यर्थः । अनेन विद्या नोदेतीत्येषा शङ्का निराकृता । प्रतिषेद्धुमशक्यत्वादित्यनेन तु यथाव्याख्यातेन बाधायोग्यत्वं दर्शितमिति विवेक्तव्यम् ॥ १ ॥

नन्वहं ब्रह्मेति ज्ञानमुक्तविधयोत्पन्नमपि न प्रतिष्ठां लभते देहेन्द्रियाद्यभिमानस्यानवरतमनुवृत्तेरित्याशङ्क्य, तस्य प्रमाणमूलत्वाभावाद्बाधितानुवृत्तिमात्रस्याभासत्वान्न विद्याप्रतिपक्षत्वमित्यभिप्रेत्य वाक्योत्थज्ञानस्य प्राबल्यमुपपादयति—

**अहंधीरिदमात्मोत्था वाचारम्भणगोचरा ।**
**निषिद्धात्मोद्भवत्वात्सा न पुनर्मानतां व्रजेत् ॥ २ ॥**

**अहंधीरिति** ॥ देहादावनात्मन्यात्मबुद्धिरहंधीरित्युच्यते साहंकर्तुरिदमंशात्पूर्वपूर्वाहंकारवासनावासितान्तःकरणरूपादिदमात्मनः सकाशादुत्थिताध्यासात्मिकेत्यर्थः । स्वरूपतोऽस्या दौर्बल्यमुक्त्वा विषयभेदादपि तदाह—वाचारम्भणगोचरेति । निरूप्यमाणं स्वतःसत्ताहीनमपि यदपरोक्षव्यवहारगोचरतया गम्यते तद्वाचारम्भणमनृतजडानात्मरूपं तदेव गोचरो विषयो यस्याः सा । तथा यत एवमतो नेतिनेतीति शास्त्रेण निषिद्धो बाधित आत्मा स्वरूपमुद्भवः कारणं यस्याः सा निषिद्धात्मोद्भवा तस्या भावो निषिद्धात्मोद्भवत्वं तस्मादिति विग्रहः । सा पुनरिदंधीरात्मयाथात्म्यज्ञानानन्तरं मानतां प्रमाणत्वं न व्रजेन्न लभेत, अवस्तुत्वादवस्तुजत्वादवस्तुविषयत्वाच्च स्वप्नावस्थविशेषज्ञानवदित्यर्थः । अतो वाक्योत्थज्ञानमेव प्रबलं नेतरदिति भावः ॥ २ ॥

इदानीं पौर्वापर्ये पूर्वदौबल्यं प्रकृतिवदितिन्यायेन प्रथमोत्पन्नाया

अपि कर्ता भोक्तेत्यादिधिय उत्तरेण ब्रह्मात्मज्ञानेन बाध्यत्वमुपपादयति—

**पूर्वबुद्धिमबाधित्वा नोत्तरा जायते मतिः ।**
**दृशिरेकः स्वयं सिद्धः फलत्वात्स न बाध्यते ॥ ३ ॥**

**पूर्वबुद्धिमिति** ॥ न शुक्त्यज्ञानजन्यां रजतबुद्धिमबाधित्वा शुक्तिधीरुत्तरोत्पद्यते एवं कर्त्रादिबुद्धिमबाधित्वा नात्मतत्त्वज्ञानमुत्तरमुत्पद्यते । अतः प्रसक्तनिषेधात्मकत्वाद्बाधस्य पूर्वसमये उत्तरप्रसक्त्यभावान्न पूर्वेणोत्तरस्य बाधः, किंतु परेण पूर्वस्य प्रसक्तस्य बाध इत्यनवद्यम् । पदार्थबोधे शब्दस्य मानान्तरसापेक्षत्वेऽपि न वाक्यार्थबोधे तदपेक्षा, पदार्थबोधेऽपि व्यवहारमात्रस्यैवापेक्षत्वात्पूर्वबुद्धेर्व्यवहाराङ्गत्वांशस्योत्तरेणात्मज्ञानेनाबाधनाच्च नोपजीव्यविरोधश्चेति द्रष्टव्यम् । किंचौपनिषदात्मज्ञानमेव तत्त्वावेदकमत्यन्ताबाध्यार्थत्वादित्याह—दृशिरिति । ब्रह्मात्माकारान्तःकरणवृत्तिप्रतिफलितापरोक्षस्फूर्तिर्दृशिरित्युच्यते सचैकः पराभावेनोपलक्षितोऽद्वितीय इति यावत् । स्वयंसिद्धः परनिरपेक्षसत्तास्फूर्तिकः स न बाध्यते । उक्तैर्विशेषणैर्बाधायोग्यत्वावगमात्फलत्वात् । नहि फलं बाध्यते । तस्य सर्वज्ञानसाधारणत्वात्सर्वव्यवहारहेतुप्रकाशत्वाच्चेत्यर्थः । नित्यसिद्धस्याप्यस्य फलत्वं विषयाकारवृत्तिव्यक्तत्वापेक्षयोपचर्यत इति भावः ॥ ३ ॥

एवं ब्रह्मात्मज्ञानस्य वाक्यादनुत्पत्तिशङ्कामुत्पन्नस्य प्राबल्योपपादनेन पूर्वप्रवृत्तप्रत्यक्षादिभिर्बाध्यार्थत्वशङ्कां चोन्मथ्येदानीं कथमिदमुत्पद्यतामिति वीक्षायां पदार्थपरिशोधनेनेति श्रौतदृष्टान्तेनोपपादयति—

**इदं वनमतिक्रम्य शोकमोहादिदूषितम् ।**

**वनाद्गान्धारको यद्वत्स्वात्मानं प्रतिपद्यते ॥ ४ ॥**

**इदं वनमिति** ॥ इदं शरीरमेव वनमिव वनं रागद्वेषशोकमोहादिभिर्व्याघ्रतस्करादिस्थानीयैर्दूषितमाक्रान्तमतिक्रम्य दिङ्मात्रमाचार्यादवगम्यान्वयव्यतिरेकालोचनया पदार्थशोधनेन देहादिकमनात्मतया त्यक्त्वा स्वमात्मानं सर्वानुस्यूतमनपोह्यं प्रतिपद्यते । अहं ब्रह्मास्मीत्यौपनिषदं पुरुषमवगच्छतीत्यर्थः । यथा गान्धारको गन्धारदेशवासी पुरुषो बद्धचक्षुरेव तस्करैरानीय महावने निक्षिप्तः स बन्धमोक्षार्थी तत्राक्रोशं कुर्वन्केनचित्कारुणिकेनोपलब्धस्तेन मोचितबन्धो दर्शितस्वदेशमार्गो ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी वनात्स्वदेशं प्रतिपद्यते, तथायमपि संसारी अविद्यारागादितस्करैर्मिथ्याज्ञानपटेन विवेकदृष्टिमाच्छाद्य स्वदेशाद्देहारण्यं प्रवेशितो बन्धमोक्षार्थी कदाचित्केनचित्कारुणिकेनाचार्येण ब्रह्मविदा त्याजितमिथ्यादृष्टिपटः प्रतिबोधितस्वदेशब्रह्ममार्गोऽन्वयव्यतिरेकाभ्यां स्वयमूहमानः स्वमात्मानमधिगच्छतीत्यर्थः ॥ ४ ॥

इति द्वितीयं आत्मज्ञानोत्पत्तिविधिप्रकरणम् ॥ २ ॥

---

## ईश्वरात्मप्रकरणम् ३

येयं ब्रह्मविद्या प्रतिपादिता तस्यां प्रकाशमानं ब्रह्म किं प्रत्यगात्मनो भेदेन प्रत्येतव्यं तदभेदेन वेति 'द्वा सुपर्णा सयुजे' त्यत्र भेदश्रवणात् 'अयमात्मा ब्रह्मे'त्यभेदश्रवणाच्च संदेहे निर्णयकारणं श्रौतं दर्शयन्वाक्यविषयमर्थं स्पष्टयति—

**ईश्वरश्चेदनात्मा स्यान्नासावस्मीति धारयेत् ।**
**आत्मा चेदीश्वरोऽस्मीति विद्या सान्यनिवर्तिका ॥ १ ॥**

---

१ प्रतिषेधप्रकरणमित्यन्यत्र.

**ईश्वर इत्यादिना ॥** ईश्वरो जगत्कारणत्वेनोपलक्षितः परमात्मा सत्यज्ञानानन्तानन्दरूपः स चेदात्मभिन्नो मेर्वादिवद्विषयभूतः परोक्षो वा स्यात्तदासावीश्वरोऽहमस्मीति मुमुक्षुर्न धारयेदात्मानं तत्त्वतो न प्रतिपद्येत । ततस्तत्त्वमस्यादिवचनविरोधः स्यात् । 'आत्मेति रूपं गच्छन्ति ग्राहयन्ति चे'ति न्यायविरोधश्च स्यादित्यर्थः । ईश्वर एवास्माहमस्मि नान्य इति चेद्धारयेद्विजानीयात्तदा न श्रुतिन्यायविरोध इति योज्यम् । सा विद्या तिरोहितभेदाकारप्रत्यग्ब्रह्मैक्यावलम्बिनी अन्यस्या अविद्याया निवर्तिका समूलसंसारनिवर्तिकेत्यर्थः । 'ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मैव सन्ब्रह्माप्येती'त्यादिश्रुतौ ब्रह्मज्ञानस्य ब्रह्मभावफलश्रवणादन्यत्वपक्षे स्थितस्य नष्टस्य वान्यस्यान्यभावानुपपत्तेरैक्यज्ञानमेव फलवदिति तत्रैव शास्त्रतात्पर्यं न भेदे । तज्ज्ञानस्याफलत्वात् 'अन्योऽसावन्योऽहमस्मीति न स वेदे' ति भेददर्शनस्य निन्दितत्वाच्च भेदश्रुतेस्त्वनाद्यविद्याकल्पितभेदानुवादपरत्वान्न स्वार्थे तात्पर्यमिति भावः ॥ १ ॥

इतश्चाभेदे वेदतात्पर्यमाह—

**आत्मनोऽन्यस्य चेद्धर्मा अस्थूलत्वादयो मताः ।**
**अज्ञेयत्वेऽस्य किं तैः स्यादात्मत्वे ह्यन्यधीह्नुतिः ॥२॥**

**आत्मन इति ॥** अस्थूलत्वादयो धर्माः प्रत्यगात्मनोऽन्यस्य भिन्नस्येश्वरस्य चेन्मता इष्टाः स्युस्तदास्येश्वरस्यानात्मभूतत्वादज्ञेयत्वेसति मुमुक्षोरस्थूलत्वादिभिः श्रौतैर्धर्मैः किं स्यान्न किमपि । स्थूलोऽहं कृशोऽहमित्यादिस्वगतभ्रान्त्यनिवृत्तेरित्यर्थः । यदा त्वस्थूलत्वादिधर्मक ईश्वरोऽहमस्मीति ज्ञायते तदा तस्याप्यात्मत्वेसति प्रतीचोऽन्यधीह्नुतिः स्वात्मन्येव गृहीतायाः कृशस्थूलत्वादिधियो मोहमूलाया बाधसिद्धिः फलं स्यादित्यर्थः ॥ २ ॥

'कस्मिन्नाकाश ओतश्च प्रोतश्चे' ति कार्यकारणात्मकजगदाश्रयप्रश्नोत्तरत्वेनाक्षरस्योपक्रमात् 'एतस्य वा अक्षरस्य प्रशासने गार्गि' इति जगदीश्वरतया मध्ये परामर्शात् 'अदृष्टं द्रष्टृ'त्यादिना तत्स्वभावकथनपूर्वकमन्ते च 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चे' त्युपसंहारादीश्वरपरता ब्राह्मणवाक्यस्याशेषस्यावधारिता, तत्र 'नान्यदतोऽस्ति द्रष्टृश्रोतृमन्तृविज्ञात्रि'ति द्रष्टृत्वाद्युपलक्षितस्य प्रत्यगात्मनोऽक्षरब्रह्माभेदश्चावधारित इतीश्वरात्मनोरभेद एव शास्त्रार्थो यतस्तस्मात्प्रत्यगात्मन्यध्यस्तस्थूलत्वादिप्रतिषेधपरमिदं वाक्यमास्थेयमित्यभिप्रेत्याह—

**मिथ्याध्यासनिषेधार्थं ततोऽस्थूलादि गृह्यताम् ।**
**परत्र चेन्निषेधार्थं शून्यतावर्णनं हि तत् ॥ ३ ॥**

**मिथ्येति ॥** ततस्तस्मान्मिथ्याध्यासाज्ञानमूलस्य निषेधार्थं निवृत्त्यर्थं अस्थूलादिप्रत्यगात्मविशेषणत्वेन गृह्यताम्। विपक्षे दोषमाह—**परत्रेति ॥** अस्थूलादिवाक्यं परत्र प्रत्यगात्मनोऽन्यत्र स्थूलत्वनिषेधार्थं चेत्स्यात्तदा हि निश्चितं शून्यतावर्णनमेव तत्स्यादात्मनोऽन्यस्य जडत्वात्तस्य च स्थौल्यादिधर्मयोगान्निषेधान्तःपातित्वे सतीश्वरस्येश्वरत्वायोगान्निषेधमात्रपरमेव वाक्यं स्यादित्यर्थः । तस्मादस्थूलादिधर्मकस्यानात्मत्वायोगादीश्वरमभ्युपगच्छतात्मैव सोऽभ्युपगन्तव्य इति भावः ॥ ३ ॥

किंच प्रत्यगात्मनोऽन्यत्र स्थूलत्वादिप्रतिषेधे चाप्राप्तप्रतिषेधो निष्फलश्चापद्येतेति दोषान्तरमाह—

**बुभुत्सोर्यदि चान्यत्र प्रत्यगात्मन इष्यते ।**
**अप्राणो ह्यमनाः शुभ्र इति चानर्थकं वचः ॥ ४ ॥**

**बुभुत्सोरिति** ।। यदि प्रत्यगात्मनो बुभुत्सोरात्मतत्त्वं बोद्धुमिच्छोः संसारित्वेनाभिमतादात्मन इतियावत् तदन्यत्र देहेन्द्रियप्राणमनस्त-द्धर्मनिषेध इष्यते तदाऽप्राण इत्यादिवचनमनर्थकं निर्विषयं स्यादन्यत्र प्राणादिप्रसक्त्यभावात्प्रतिषेधस्य च दृष्टार्थत्वादित्यर्थः ॥ ४ ॥

इति तृतीयं ईश्वरात्मप्रकरणम् ॥ ३ ॥

---

## तत्त्वज्ञानस्वभावप्रकरणम् ४

ननु यदिदमीश्वराभेदेनात्मनो ज्ञानं मोक्षसाधनमुक्तं तन्नोपपद्यते संचितानेककर्मसद्भावात्कर्मणां च फलावश्यंभावनियमात्तैः प्रतिबन्ध-संभवादिति तत्राह—

**अहंप्रत्ययबीजं यदहंप्रत्ययवत्स्थितम् ।**
**नाहंप्रत्ययवह्न्युष्टं कथं कर्म प्ररोहति ॥ १ ॥**

**अहंप्रत्ययेति** ।। अहमिति प्रत्ययोऽहंकारोऽनात्मन्यात्माभिमान-लक्षणः स बीजं कारणं यस्य कर्मणस्तदहंप्रत्ययबीजं अहमिति प्रतीयते आत्मा यस्मिन्नन्तःकरणे साभासे तदहंप्रत्ययवत्तस्मिन्नहंप्रत्ययवति स्थितं संचितं यत्कर्मजातं तन्नाहं कर्ता भोक्ता, किंतु ब्रह्मैवाहमस्मीति यः प्रमाणजनितः प्रत्ययः स एव वह्निस्तेनोष्टं दग्धं कथं पुनः प्ररोहति फलोन्मुखं जायेतेति योजना । तथाच श्रुतिस्मृती 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे'ति ज्ञानोदये नान्तरीयकतया मूलाज्ञानस्य विरोधादेव निवृत्तिसंभवात्तदा तत्कार्यान्तःकरणस्यापि निवृत्तेराश्रयाभावे कर्मस्थित्ययोगात्कुतस्तेन मोक्षप्रतिबन्धशङ्केत्यभिप्रायः ॥ १ ॥

ननु यथा ज्ञानवतोऽपि भिक्षाटनादिकर्म सफलमुपलभ्यते तथा तस्यादृष्टफलमपि कर्म सफलं स्यादिति कल्प्यत इति शङ्कते—

**दृष्टश्चेत्प्ररोहः स्यान्नान्यकर्मा स इष्यते ।**
**तन्निरोधे कथं तत्स्यात्पृच्छामो वस्तदुच्यताम् ॥ २ ॥**

**दृष्टश्चेत्प्ररोहः स्यादिति** ॥ परिहरति—नान्यकर्मा स इष्यत इति । नेति निषेधार्थः । स भिक्षाटनादिर्विदुषो व्यापारोऽन्यकर्मा । अन्यत्र प्रवृत्तं फलं कर्म कारणं यस्य सोऽन्यकर्मा स इष्यते । ज्ञानाविरोधिप्रारब्धफलकर्मनिबन्धनं हि भिक्षाटनादि नैवंविधलक्षणं तस्य ज्ञानविरोधित्वादित्यर्थः । ननु ज्ञानादज्ञाननिवृत्त्या तन्मूलाहंकारनिवृत्तिद्वारेण तदाश्रयकर्मनिवृत्तौ कथमारब्धमपि कर्म सिद्ध्येद्यन्निमित्ता विदुषो भिक्षाटनादिकर्मप्रवृत्तिरिति पृच्छति पूर्ववादी तन्निरोध इति । कर्माश्रयः प्रथमतच्छब्दार्थः । कर्म द्वितीयतच्छब्दार्थः ॥ २ ॥

उत्तरमाह—

**देहाद्यारम्भसामर्थ्याज्ज्ञानं सद्विषयं त्वयि ।**
**अभिभूय फलं कुर्यात्कर्मान्ते ज्ञानमुद्भवेत् ॥ ३ ॥**

**देहादीति** ॥ सद्विषयं प्रमाणजनितत्वेन प्रबलमपि ब्रह्मात्मविषयं ज्ञानमभिभूय विदेहकैवल्यरूपात्फलात्प्रच्याव्य कर्म प्रारब्धफललक्षणं स्वफलं देहाभासजगदाभासरूपं त्वयि ज्ञानवत्यपि कुर्यादेव । कुतः । देहाद्यारम्भंप्रति समर्थत्वादन्ते प्रारब्धकर्मफलभोगावसाने सति ज्ञानं प्रतिबन्धरहितं समुद्भवेदुद्भूतं भवति । वर्तमानकार्यसंपादकाविद्यालेशमप्यपबाध्य विद्वांसं स्वाराज्ये स्थापयेदित्यर्थः ॥३॥

ननु प्रारब्धकर्मवशाज्ज्ञानिनोऽपि भोगः स्यान्नत्वनारब्धकर्मतत्फलयोस्तस्मिन्नवस्थितिरिति कथमुपपद्येत, अज्ञानकार्यत्वाविशेषात्सर्वस्याज्ञाननिवृत्तौ च पुनराश्रयाभावेनावस्थानाभावस्य समत्वादित्याशङ्क्य विशेषमाह—

**आरब्धस्य फले ह्येते भोगो ज्ञानं च कर्मणः ।**
**अविरोधस्तयोर्युक्तो वैधर्म्यं चेतरस्य तु ॥ ४ ॥**

आरब्धस्येति ॥ भोगो ज्ञानं चेत्येते हि यस्मादारब्धस्य कर्मणः फलेऽतस्तयोरविरोधो युक्त इतरस्य त्वनारब्धफलस्य संचितस्य क्रियमाणस्य वा कर्मणो वैधर्म्यं वैपरीत्यं विरोध एवेत्यक्षरार्थः । अयंभावः—ज्ञानं हि स्वकारणाज्जायमानं शरीरादिसापेक्षमेव जायते, अशरीरस्यागन्तुकज्ञानासंभवात् । शरीरादिकं तु न ज्ञानकारणादुत्पद्यते, अन्यकारणस्यान्यहेतुत्वायोगात् । अतः कैश्चित्कर्मविशेषैः शरीरविशेषे ज्ञानोत्पत्तियोग्ये स्वफलदानायारब्धे सति तमाश्रित्य ज्ञानहेतुकर्माणि ज्ञानमारभन्त इत्यभ्युपगन्तव्यम् । तथाचारब्धे देहे तद्भोगस्यावश्यंभावित्वाद्भोगप्रदकर्मारब्धशरीरमाश्रित्य स्वहेतुसमासादितं ज्ञानं स्वफलमज्ञाननिवृत्तिं कुर्वदपि न सद्यो भोगैकनाश्यदेहारम्भककर्माक्षिप्ताविद्यालेशं निवर्तयत्युपजीव्यविरोधित्वाभावादिति नारब्धफलकर्मज्ञानयोर्विरोधोऽनारब्धफलानां तु कर्मणामकर्त्रात्मतत्त्वज्ञानोदयविरोधादेव कर्तृस्वभावनिवृत्तावाश्रयाभावादभावोपपत्तेर्न ज्ञानसहावस्थानमुपपद्यत इत्यस्ति विशेष इति ॥ ४ ॥

ननु ज्ञानिनोऽपि चेद्भोगो देहारम्भककर्मनिबन्धनोऽस्ति तर्हि तस्य कदाचिद्देहात्माभिमानसंभवात्तदुद्भूतदुरितप्रतिबन्धवशान्मोक्षानुपपत्तिरिति चेन्नेत्याह—

**देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ।**
**आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ।**
**ततः सर्वमिदं सिद्धं प्रयोगोऽस्माभिरीरितः ॥ ५ ॥**

देहात्मज्ञानवदिति ॥ यथा विवेकविलक्षणस्य लौकिकस्य देहे मनुष्योऽहमित्यात्मज्ञानं निःसंदिग्धमुपलब्धं तथा मुख्यात्मन्येव देहाद्यहंकारपर्यन्तसाक्षिण्यात्मन्येव यस्य देहात्मज्ञानबाधकमहमस्मि परं ब्रह्मेत्येवंरूपं निःसंदिग्धं ज्ञानं भवेत्स यथोक्तज्ञानबलादनर्थराशेरपनीतत्वान्मुक्तिमनिच्छन्नपि बलान्मुच्यत एवेत्यर्थः । तथाचाविर्भूतात्मतत्त्वस्य पुनर्देहाभिमानहेत्वभावान्न मोक्षे कोऽपि प्रतिबन्ध इति भावः । तथाच श्रुतिः 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इत्याद्या । तथा स्मृतयोऽपि 'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संबध्यते पुनः । यथा पर्वतमादीप्तं नाश्रयन्ति मृगद्विजाः । तद्वद्ब्रह्मविदो दोषा नाश्रयन्ते कदाचन । मन्त्रौषधबलैर्यद्वज्जीर्यते भक्षितं विषम् । तद्वत्सर्वाणि कर्माणि जीर्यन्ते ज्ञानिनः क्षणा' दिति । ज्ञानिनः कर्मणा प्रतिबन्धाभावमुपपादितमुपसंहरति —तत इत्यर्धश्लोकेन । सर्वमिदमिति प्रारब्धकर्माविरोधित्वोक्तिः । सिद्धं श्रुत्यादिप्रमाणसिद्धमित्यर्थः । प्रयोग उपपत्तिः ॥ ५ ॥

इति चतुर्थं तत्त्वज्ञानस्वभावप्रकरणम् ॥ ४ ॥

---

## बुद्ध्यपराधप्रकरणम् ५[1]

यदि प्रागुक्तरीत्या ब्रह्मात्मज्ञानममृतत्वं गमयेत्किमिति तर्हि सर्वैरहंब्रह्मासीत्यात्मरूपं न गृह्यते निसर्गत एव सर्वेषां परमपुरुषार्थार्थित्वादिति तत्राह—

**मूत्राशङ्को यथोदङ्को नाग्रहीदमृतं यथा ।**
**कर्मनाशभयाज्जन्तोरात्मज्ञानाग्रहस्तथा ॥ १ ॥**

---

१ इत्यहंप्रत्ययप्रकरणमित्यन्यत्र.

**मूत्राशङ्क इति** ॥ अत्रेयमाख्यायिका—उदङ्को नाम कश्चिदृषिर्भगवन्तं महाविष्णुं तपसा तोषयित्वा देवरक्षितममृतं प्रार्थितवान्। तदा भगवता देवेन्द्रं प्रत्युक्तममृतमस्मै दीयतामिति । इन्द्रस्तु विष्णोराज्ञां पालयन्नमृतकलशं नीत्वा मातङ्गवेषमास्थाय स्वबस्तिदेशे कलशमुपनिधायोदङ्काय दातुमारेभेऽसूयया माभवत्वस्यामृतपानमिति मन्यमानः । तदुदङ्कोऽपि चण्डालमूत्रशङ्कया न जग्राहेति । उदङ्को मूत्राशङ्कः सन् यथाभूतमेव प्रत्यक्षोपलब्धमप्यमृतं यथा नाग्रहीन्न मदभिलषितममृतमिदमिति न गृहीतवान् जातिनाशभयादिति योजना, तथा जन्तोर्लोकस्य वर्णाश्रमोपाधिविहितकर्मनाशभयादात्मज्ञानस्य यथोक्तस्याऽग्रहस्तस्मिन्ननादर इत्युत्तरार्धयोजना। पदार्थस्वरूपापरिज्ञानं विपरीतज्ञानं च श्रुत्युक्तात्मस्वरूपाग्रहणकारणमिति भावः ॥ १ ॥

ननु दृष्टान्ते देवेन्द्रस्य वेषान्यत्वममृतकलशस्य च मूत्राशयस्थाननिवेशनं च जात्यन्तरमूत्रभ्रमोत्पादनेनामृताग्रहणकारणमासीन्न तथात्मनो ब्रह्मभूतस्य भ्रमकारणमस्तीत्यत आह—

**बुद्धिस्थश्चलतीवात्मा ध्यायतीव च दृश्यते ।**
**नौगतस्य यथा वृक्षास्तद्वत्संसारविभ्रमः ॥ २ ॥**

**बुद्धिस्थ इति** ॥ अनाद्यविद्यया स्वात्मन्यध्यस्तबुद्धौ लिङ्गशरीरे अभिमानित्वेन स्थित आत्मा तस्यां बुद्धौ चलन्त्यां चलतीव दृश्यते न वस्तुतश्चलत्यविक्रियत्वात्तथा तस्यां ध्यायन्त्यां निश्चलीभूतायां ध्यायतीव निश्चल इव दृश्यते प्रतिभासते न वस्तुतो ध्यायति। चलनाभावे तत्प्रतियोगिकस्य नैश्चल्यस्याप्यभावादित्यर्थः । विकारवद्बुद्ध्यविवेकादादावेव संसार्यहमस्मीति विपरीतनिश्चयदोषाच्छ्रुत्यादिभिरीर्यमाणमप्यात्मनो ब्रह्मत्वं न गृह्णाति लोक इत्यभिप्रायः । अविवे-

कादन्यथाप्रतिपत्तौ दृष्टान्तमाह—नौगतस्येति । तद्वदिति दार्ष्टान्तिकोक्तिः ॥ २ ॥

उक्तमेव प्रपञ्चयति—

**नौस्थस्य प्रातिलोम्येन नगानां गमनं यथा ।**
**आत्मनः संसृतिस्तद्वद्ध्यायतीवेति हि श्रुतिः ॥ ३ ॥**

नौस्थस्येति ॥ जलस्थायां चलन्त्यां नावि स्थितस्य जनस्य यथा नौगतिदिग्वैपरीत्येन जलाशयतीरस्थानां नगानां वृक्षादीनां गमनं विभाव्यते उपाध्यविवेकात् तद्वदसंसारिणोऽप्यात्मनः संसृतिरनुभूयत इत्यर्थः । उक्तार्थानुवादिनीं श्रुतिं पठति—ध्यायतीवेति हि श्रुतिरिति । 'स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीवे' ति श्रूयत इत्यर्थः ॥ ३ ॥

प्रपञ्चितदृष्टान्तानुगुण्येन दार्ष्टान्तिकं प्रपञ्चयन्नुदाहृतश्रुत्यर्थमाह—

**चैतन्यप्रतिबिम्बेन व्याप्तो बोधो हि जायते ।**
**बुद्धेः शब्दादिभिर्भासस्तेन मोमुह्यते जगत् ॥ ४ ॥**

चैतन्यप्रबिम्बेनेति ॥ चैतन्यप्रतिबिम्बश्चिदाभासस्तेन व्याप्तो हि यस्माद्बुद्धेर्बोधो विषयाकारा बुद्धिर्जायते, अतः स्वाभासाविवेकाच्छब्दादिभिर्बुद्धिवृत्तिव्याप्तविषयैः । इत्थंभावे तृतीया । विषयभूतदेहाद्यात्मना भासो भासनं स्फुरणमात्मनो भवतीति शेषः । यदि शब्दादिनिर्भास इति पाठो लभ्यते तदा बोधविशेषणम् । शब्दादेर्विषयस्य निर्भासो यस्मिंस्तथेति सुगमम् । येनैवमेकस्यां बुद्धिवृत्तौ देहादिविषयचैतन्ययोः संश्लेष इव भवति तेनान्योन्याविवेकनिमित्तेन जगज्जनोऽतिशयेन मुह्यतीत्यर्थः । यथा नौस्थः पुरुषो नावश्चलनं नानुभवति अचलत्सु च वृक्षेषु चलनमनुभवतीत्युपाधिसामर्थ्यादेवं

बुद्धिस्थदेहाद्यात्मभावमिवापन्न आत्मा तदीयं व्यापारं न पृथगनुभवति तदाभासाविवेकात्तु चिदात्मनि विकारमारोपयन्ननुभवति मृषैवेत्येत- द्ध्यायतीवेत्यादिश्रुत्योच्यते । अत उपाधिसामर्थ्यात्संसारित्वविभ्रम इत्यभिप्रायः ॥ ४ ॥

एवमविवेकाधीने संसाराध्यासे विविक्तपदार्थस्य वाक्यादहंब्रह्मा- स्मीति बुद्धिवृत्त्युदये मुक्तिः फलिष्यत्यतः पदार्थविवेकवता भाव्यं मुमुक्षुणेत्यभिप्रेत्याह—

**चैतन्यभास्यताहमस्तादर्थ्यं च तदस्य यत् ।**
**इदमंशप्रहाणेन परः सोऽनुभवो भवेत् ॥ ५ ॥**

**चैतन्यभास्यतेति** ॥ अहमोऽहंकारस्य चिदचिद्ग्रन्थिरूपस्य यच्चैतन्यभास्यता दृश्यता यच्च तादर्थ्यं चिदात्मनो विषयोपस्थापकत्वेन तच्छेषत्वमस्ति तदुभयमस्याहंकारस्य संबन्धि तस्मिन्निदमंशस्य प्रहाणे विवेके सति न भवेन्न स्यादिति योजना । तत्र योऽनुभवः साक्षी परिशिष्टः स परः परमात्मा वाक्यार्थभूतो भवेदित्यर्थः । **यद्वा** अस्या- हमोऽहंकारस्य चैतन्यभास्यता जडता तादर्थ्यं च तच्छेषत्वं च यद्य- स्मादस्ति तत्तस्मादयमहंकारो नात्मेति वेद्यांशप्रहाणेन तस्मिन्नस्मदर्थ- त्वाभिमानत्यागेन योऽनुभवः स पर आत्मेति निश्चयवान्भवेदिति योजना। **अथवा** स वाक्यार्थविषयः परः सर्वोत्तरोऽनुभवोऽहमोऽहंकार- स्येदमंशप्रहाणेन पृथक्करणेन भवेदिति संबन्धः । इदमनिदमात्मक- स्याहंकारस्य संबन्धी य इदमंशस्तस्य साक्षिसाक्ष्यान्वयव्यतिरेकाग- मापायितदवध्यन्वयव्यतिरेकालोचनरूपेण मननेनापबाधेसति अवशि- ष्टांशोऽनपोह्य आत्मेत्यनुभवो भवेदित्यर्थः । नन्वहमित्यवभासे इदमंश एव न चकास्ति यस्य प्रहाणेन परोऽनुभवो भवेदित्याशङ्कायामाह—

चैतन्यभास्यतेति । तादर्थ्यं चेति च । सुषुप्त्यादावात्मनि भासमानेऽप्यहंकारस्यानवभासादनात्मत्वे निश्चिते सति जागरितादावागन्तुकचैतन्यभास्यता तस्य सिद्धा । अतः प्रतिभासते इदमंशाभावेऽपि चैतन्यभास्यत्वेन लक्षणेनास्तीदमाकारतेत्यर्थः । तथा तादर्थ्यमप्यस्ति आत्मनि कर्तृत्वभोक्तृत्वादिव्यवहारनिर्वाहकतया आत्मशेषत्वमस्ति यद्यस्मादेवं तत्तस्मादप्यनात्मत्वलक्षण इदमंशो विद्यते अतस्तत्प्रहाणेन ब्रह्मात्मानुभवो भवेदिति सर्वं समञ्जसं ॥ ५ ॥

इति पंचमं बुद्ध्यपराधप्रकरणम् ॥ ५ ॥

---

## विशेषापोहप्रकरणम् ६

पदार्थविवेकवतो वाक्यादहंब्रह्मेति ज्ञानं भवतीत्युक्तम्, तत्राहमित्यत्रेदमंशप्रहाणेन साक्षितत्त्वस्य शोधनप्रकारः सूक्ष्मोपायो निर्दिष्टः, तत्रासमर्थंप्रति स्थूलोपायेन पदार्थशोधनप्रकारमुपदेष्टुं प्रकरणमारभते । तत्र यत्स्वरूपप्रहाणमन्तरेण ज्ञातुं न शक्यते यथाग्नेरौष्ण्यं तस्य स्वरूपत्वादेव न विशेषणता यद्यपि तथापि तथाविधस्य क्वचिद्विशेषणत्वव्यवहारः कल्पितभेदमाश्रित्येति स्थिते आत्मनि सति सत्ताचैतन्यानन्दानामनपायान्न तेषां विशेषणत्वं किंतु स्वरूपत्वमेव कृशः स्थूलः कृष्णो गौरोहं मनुष्यः श्रोता द्रष्टा वक्ता कामी क्रोधी ज्ञानी कर्त्ता भोक्ता सुखी दुःखीत्येवंविधानि विशेषणानि नात्मनः सत्तादिवत्स्वरूपभूतानि सत्यप्यात्मनि सुषुप्त्यादौ तेषामभावादित्येवमात्मनः पृथगुद्धृत्य तस्य कूटस्थतावधेयेत्यभिप्रेत्य पृथग्भूतस्य विशेषणत्वाभावे दृष्टान्तमाह—

---

१ मूत्राशङ्कप्रकरणमित्यन्यत्र.

**छित्त्वा त्यक्तेन हस्तेन स्वयं नात्मा विशिष्यते ।**
**तथा शिष्टेन सर्वेण येन येन विशेष्यते ॥ १ ॥**

**छित्त्वा त्यक्तेनेति ॥** यथायं दृष्टान्तस्तथा येन येन मनुष्यत्वादिना विशेष्यते तेन सर्वेण शिष्टेन त्यक्तहस्तातिरिक्तेन पादादिना वा स्वयमात्मा न विशिष्यते यथा हस्तच्छेदानन्तरं हस्तवानहमिति न विशिष्टप्रत्ययः क्रियते एवमेव पादादिमान्मनुष्योऽहमित्यादिविशिष्टप्रत्ययो न कार्य इत्यर्थः ॥ १ ॥

देहद्वयसमवायिधर्माणामात्मनि व्यभिचारात्तैरात्मा विशिष्य न प्रत्येतव्य इत्युक्तमनूद्य फलितमाह—

**तस्मात्त्यक्तेन हस्तेन तुल्यं सर्वं विशेषणम् ।**
**अनात्मत्वेन तस्माज्ज्ञो मुक्तः सर्वैर्विशेषणैः ॥ २ ॥**

**तस्मादिति ॥** अनात्मत्वेन त्यक्तेन हस्तेनेति संबन्धः । विमतानि विशेषणानि नात्मस्वभावभूतानि विशेषणत्वात् छित्त्वा त्यक्तहस्तवदित्यर्थः । यस्मादेवं तस्मात् ज्ञो ज्ञानवान्विवेकज्ञानवान्सर्वविशेषणैर्मुक्तश्चित्सदानन्दमात्रात्मक एवावशिष्यत इत्यर्थः ॥ २ ॥

उक्तन्यायेन विशेषणानामनात्मत्वेऽपि नात्मनस्तद्वियोगोऽस्ति आगमापायाभ्यां संबन्धनैरन्तर्यादित्याशङ्क्याह—

**विशेषणमिदं सर्वं साध्वलंकरणं यथा ।**
**अविद्याध्यासतः सर्वं ज्ञात आत्मन्यसद्भवेत् ॥ ३ ॥**

**विशेषणमिदं सर्वमिति ॥** इदं सर्वं विशेषणं यथालंकरणमलंकार्यसंबन्धेऽपि न तत्तादात्म्यतद्धर्मत्वबुद्धिविषयस्तथा साधु शोभनं युक्तमिति यावत् । इतरथा आगमापायानुपपत्तेरित्यर्थः । तर्हि कुतो

मनुष्योऽहमित्यादौ तादात्म्यावभासस्तत्राह—अविद्याध्यासत इति । मोहादेव तथावभास इत्यर्थः । यस्मादविद्ययाध्यस्तमेवात्मनीदं सर्वं विशेषणमतो ज्ञाते आत्मन्यविद्यानिवृत्तावसत् बाधितं कालत्रयेऽप्यविद्यमानं भवेत्तथा निश्चितं भवेदिति योजना ॥ ३ ॥

ज्ञात आत्मनीत्युक्ते ज्ञेयत्वमात्मन उक्तमिति शङ्का स्यात् ज्ञेयत्वे च विशेषणादिवदनात्मत्वप्रसङ्ग इत्याशङ्क्याह—

**ज्ञातैवात्मा सदा ग्राह्यो ज्ञेयमुत्सृज्य केवलः ।**
**अहमित्यपि यद्ग्राह्यं व्यपेताङ्गसमं हि तत् ॥ ४ ॥**

ज्ञातैवेति ॥ ज्ञेयमुत्सृज्य दृश्यांशापोहं कृत्वा यो ज्ञाता सदा सर्वस्य स एवात्मा न ग्राह्यांश इति ग्राह्योऽध्यवसेयः । किंलक्षणः । केवलो ज्ञातृत्वविशेषणेनापि रहित इत्यर्थः । ज्ञातृत्वाद्युपलक्षितं चिन्मात्रमलुप्तप्रकाशस्वभावतया सर्वानुस्यूतं वस्त्वात्मेति विवेकवतो निश्चितप्रत्ययो भवेदिति भावः । अहमित्यनुभूयमानत्वात्कथं ज्ञातैवात्मेत्युच्यत इत्यतआह—अहमित्यपीति । यदपि इदमहमिति ग्राह्यमात्मरूपं मन्यसे तद्व्यपेताङ्गसमं छिन्नहस्ततुल्यं हि एव तत्सुषुप्त्यादावात्मन्यवभासमानेऽप्यहमित्यनवभासनादहमो व्यभिचारित्वे सत्यात्मदृश्यतयात्मत्वायोगादित्यर्थः ॥ ४ ॥

आत्मनोऽहंप्रत्ययग्राह्यत्वाभावे चक्षुरादेरप्यविषयस्य कुतः सिद्धिरिति मुग्धशङ्कां दृष्टान्तेनापाकुर्वन्नात्मनोऽन्यनिरपेक्षां स्वतःसिद्धिं साधयति—

**यावान्स्यादिदमंशो यः स स्वतोऽन्यो विशेषणम् ।**
**विशेषप्रक्षयो यत्र सिद्धो ज्ञश्चित्रगुर्यथा ॥ ५ ॥**

